॥ ब्रह्मानुचिन्तनम् ॥

अहमेव परं ब्रह्म वासुदेवाख्यमव्ययम् ।
इति स्यान्निश्चितो मुक्तो बद्ध एवान्यथा भवेत् ॥ १॥

अहमेव परं ब्रह्म निश्चितं चित्त चिन्त्यताम् ।
चिद्रूपत्वादसङ्गत्वादबाध्यत्वात् प्रयत्नतः ॥ २॥

अहमेव परं ब्रह्म न चाहं ब्रह्मणः पृथक् ।
इत्येवं समुपासीत ब्राह्मणो ब्रह्मणि स्थितः ॥ ३॥

सर्वोपाधिविनिर्मुक्तं चैतन्यं च निरन्तरम् ।
तद्ब्रह्माहमिति ज्ञात्वा कथं वर्णाश्रमी भवेत् ॥ ४॥

अहं ब्रह्मास्मि यो वेद स सर्वं भवति त्विदम् ।
नाभूत्या ईशते देवास्तेषामात्मा भवेद्धि सः ॥ ५॥

अन्यो असावहमन्यो अस्मीत्युपास्ते यो अन्यदेवताम् ।
न स वेद नरो ब्रह्म स देवानां यथा पशुः ॥ ६॥

अहमात्मा न चान्योऽस्मि ब्रह्मैवाहं न शोकभाक् ।
सच्चिदानन्दरूपोऽहं नित्यमुक्तस्वभाववान् ॥ ७॥

आत्मानं सततं ब्रह्म संभाव्य विहरन्ति ये ।
न तेषां दुष्कृतं किञ्चिद्दुष्कृतोत्था न चापदः ॥ ८॥

आत्मानं सततं ब्रह्म संभाव्य विहरेत्सुखम् ।
क्षणं ब्रह्माहमस्मीति यः कुर्यादात्मचिन्तनम् ॥ ९॥

तन्महापातकं हन्ति तमः सूर्योदयो यथा ।
अज्ञानाद्ब्रह्मणो ज्ञातमात्माकाशं बुद्बुदोपमम् ॥ १०॥

आकाशाद्वायुरुत्पन्नो वायोस्तेजस्ततः पयः ।
अद्भ्यश्च पृथिवी ज्ञाता ततो व्रीहियवादिकम् ॥ ११॥

पृथिव्यप्सु पयो वह्नौ वह्निर्वायौ नभस्यसौ ।
नभोऽप्यव्याकृते तच्च शुद्धे शुद्धोऽस्म्यहं हरिः ॥ १२॥

अहं विष्णुरहं विष्णुरहं विष्णुरहं हरिः ।
कर्तृभोक्त्रादिकं सर्वं तदविद्योत्थमेव च ॥ १३॥

अच्युतोऽहमनन्तोऽहं गोविन्दोऽहमहंहरिः ।
आनन्दोऽहमशेषोऽहमजोऽहममृतोऽस्म्यहम् ॥ १४॥

नित्योऽहं निर्विकल्पोऽहं निराकारोऽहमव्ययः ।
सच्चिदानन्दरूपोऽहं पङ्चकोशातिगोऽस्म्यहम् ॥ १५॥

अकर्ताऽहमभोक्ताऽहमसङ्गः परमेश्वरः ।
सदा मत्सन्निधानेन चेष्टते सर्वमिन्द्रियं ॥ १६॥

आदिमध्यान्तमुक्तोऽहं न बद्धोऽहं कदाचन ।
स्वभावनिर्मलः शुद्धः स एवाहं न संशयः ॥ १७॥

ब्रह्मैवाहं न संसारी मुक्तोऽहमिति भावयेत् ।
अशक्नुवन्भावयितुं वाक्यमेतत्सदाऽभ्यसेत् ॥ १८॥

यदभ्यासेन तद्भावो भवेद्भ्रमरकीटवत् ।
अत्रापहाय सन्देहमभ्यसेत्कृतनिश्चयः ॥ १९॥

ध्यानयोगेन मासैकाद्ब्रह्महत्यां व्यपोहति ।
संवत्सरं सदाऽभ्यासात्सिद्ध्यष्टकमवाप्नुयात् ॥ २०॥

यावज्जीवं सदाऽभ्यासाज्जीवन्मुक्तो भवेद्यतिः ।
नाहं देहो न च प्राणो नेन्द्रियाणि तथैव च ॥ २१॥

न मनोऽहं न बुद्धिश्च नैव चित्तमहङ्कृतिः ।
नाहं पृथ्वी न सलिलं न च वह्निस्तथाऽनिलः ॥ २२॥

न चाकाशो न शब्दश्च न च स्पर्शस्तथा रसः ।
नाहं गन्धो न रूपं च न मायाऽहं न संसृतिः ॥ २३॥

सदा साक्षिस्वरूपत्वाच्छिव एवास्मि केवलः ।
मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् ॥ २४॥

मयि सर्वं लयं याति तद्ब्रह्मास्म्यहमद्वयम् ।
सर्वज्ञोऽहमनन्तोऽहं सर्वेशः सर्वशक्तिमान् ॥ २५॥

आनन्दः सत्यबोधोऽहमिति ब्रह्मानुचिन्तनम् ।
अयं प्रपञ्चो मिथ्यैव सत्यं ब्रह्माहमव्ययम् ॥ २६॥

अत्र प्रमाणं वेदान्ता गुरवोऽनुभवस्तथा ।
ब्रह्मैवाहं न संसारी न चाहं ब्रह्मणः पृथक् ॥ २७॥

नाहं देहो न मे देहः केवलोऽहं सनातनः ।
एकमेवादिवितीयं वै ब्रह्मणो नेह किंचन ॥ २८॥

हृदयकमलमध्ये दीपवद्वेदसारं
    प्रणवमयमतर्क्यं योगिभिर्ध्यानगम्यम् ।
हरिगुरुशिवयोगं सर्वभूतस्थमेकं
    सकृदपि मनसा वै चिन्तयेद्यः स मुक्तः ॥ २९॥

॥ इति श्रीमद् शङ्कराचार्यविरचितं ब्रह्मानुचिन्तनं समाप्तं ॥